एस्.जगन्नाथः। मैसूरु
jagannathas1956@gmail.com




९
२.२.२०२१
मङ्गलवासरः

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

## जगन्नाथीयम्

**विरसाः प्रवचनधारा**
**निरर्थिकाः पाठ्यवस्तुकृतयश्च।**
**साध्यस्य साधने दृढ**
**धियं निरोद्धुं न शक्नुवन्ति जनम्।।**

### आशीः

मेघ! स्फूर्जथुकारी
भीतिं यः सृजसि त्वम्।
धत्से किं न स एव
श्रीरम्यं सुरचापम्।।
क्षुद्रो वेपथुरेष
क्रूरा वाग् घघतीति।
विश्वस्मिन् सकलेऽपि
प्रीतिव्याहृतिपूर्णे।।
वात्ये त्वं बहुघोरा
सर्वाशाविनिहन्त्रि!
वात त्वं न शनैः किं
वासि स्पर्शसुखाय।।
नेत्रान्निःसरदश्रु
प्रायः श्वोऽथ परश्वः।
बाष्पं मोदसमुत्थं
कुर्यादित्यहमूहे।।
अश्मानः पथि भायुः
कार्पासा इव बाढम्।
आशाः स्युर्न निराशाः
कण्टान्मां सुममेतु।।

## ब्रह्मकाव्ये तृतीयः सर्गः

१.सूर्येन्द्वोर्दिनरजनीक्रमेण कर्त्रोः
कालीयप्रतिनिवहस्य दिक्प्रयाणे।
आर्याम्बा जगदुपकारितात्त्विकानां
भाव्यत्युद्धवचतुरं दधार गर्भम्।।
२.श्रुत्वैतं निखिल-ख-वृत्तिजाड्यशक्तं
वृत्तान्तं शिवगुरुरातनोद् वितर्कान्।
निःस्पन्दान्निजनयनादुदन्तहारि-
ण्यामोदस्फुटनयने विनेयसङ्घे।।
३.मासानामथ नवके युगायमाने
हेवाकप्रखरतया क्रमेण पूर्णे।
प्राची दिग् रविमिव कु-प्रबोधहेतो-
रार्याम्बांऽशुयुतमसूत पुंशिशुं सा।।
४.साङ्ख्यादिप्रतिमततूलराशिकीला
वेदान्ताक्रमिकपथीनतर्जनी च।
जातेति स्वयमपि न प्रसूरजानाद्
वैदान्ती भुवि लघु सत्परंपराऽवैत्।।
५.आरेभे शिवगुरुरात्ततातभावः
सामान्यो जनक इवातिचित्तनृत्यम्।
आर्याम्बाऽप्यपरजनन्यभिन्नरीत्या
वात्सल्यग्रथितसुखानुभूतिमाप्नोत्।।
६.चक्राते बहुतरलोकमोदकर्त्रीं
तावुच्चारणसरलां निजार्भकस्य।
शास्त्रोक्तिस्तरवदशोकगुल्मनीत्या
नामस्थापनदिवसे हि शङ्कराख्याम्।।
७.संप्राप्या अमुकवयस्यमी प्रभावा
इत्येवं शिशुविषये विशेषविज्ञैः।
पित्रोर्यद् यदभिसूच्यते समस्तं
तद् दृष्ट्वा निजशिशुके प्रणन्दतुस्तौ।।
८.उत्तानं शयनमथावतानरूपं
सन्द्रष्टुं जनक उरोऽहनं सुतस्य।

स प्रायः समयविहीनतायुतः सन्
अप्युत्कोऽध्वरसमये चकार दोषान्॥
९.मुग्धेनाम्बुरुहसहोदरेक्षणेन
स्पष्टत्वस्थितिरहितेन लालकेन।
जानुभ्याम् अदृढतरेण चङ्क्रमेण
स्मित्या चातनुत मुदं शिशुर्जनन्याः॥
१०.उन्मीलत्कुतुकवदब्जचारुनेत्रो
वृद्धाक्षारुणिमकरः स बालरत्नम्।
यज्ञानामतिशयतः प्रियेऽपि ताते
पात्रत्वं सुरपमुखक्रुधश्चकार॥
११.शारीरी जनयति मानसी च वृद्धि
र्बालानां प्रसवितृभिन्नलोकपीडाम्।
उत्क्लेशव्यतिकरशङ्करीयहिंसा
कोपोग्रां कतिचिदथारभन्त निन्दाम्॥
१२.अङ्घो प्राक् चलितुमतीवकष्टयुक्तो-
ऽप्येतर्हि प्लवगसखो भवन्ननार्यः।
अस्मत्संजनयदुपद्रवक्रियावान्
एवं गीः श्रवणसुधा बभूव पित्रोः॥
१३. मित्रैः स्वैरतिचटुलां धियं दधानः
कापेये प्रभवति शङ्करो निरोध्यः।
श्रुत्वैवं बहु मुमुदे प्रसूः प्रसूनां
लाल्यः किं किटिरपि न श्रमात् प्रसूतः॥
१४.स द्वित्राक्षरयुतशब्दनिःसृतौ त्व
त्क्लेशोऽस्मत्स्मृतिवशमागतः पुराणः।
आकर्ण्य द्रुतमधुना प्रलापगाढं
शालूरारवपरुषं वचस्त्वदीयम्॥
१५.क्षिप्तः सन्निति स वयोऽतिवृद्धलोकै
र्बालानां चपलतमः स शङ्करस्तु।
एकेन श्रवणपुटेन तं गृहीत्वा-
ऽधिक्षेपं झटिति परेण दूरमौज्झत्॥
१६.कस्मिंश्चिद्दिवस उदुम्बरद्रुमं स
क्रीडायै कपिमतिरारुरोह बालः।
शाखायां सुदृढगतौ बताक्षमः सन्
पादस्य स्खलनवशात् पपात चाशु॥
१७.शाखातोऽवनिपतनात् स रोदनानां
तारस्थाय्युपचितस्वरोद्भवानाम्।
वात्यां प्रारभत सुरश्रुतिद्वयघ्नां
बालेष्वारभटि ! गता वराऽसि वृत्ते !॥
१८.आकाशः किमपतदूर्ध्वतः स्वशीर्षे
पाथोधिः किमडयत द्युलोकामारात् ।
इत्येवं विविधविकल्पनैरधीरा
माताऽधावदथ सुतः पपात यत्र॥
१९.संतोषाद् बहुविधरागभावगर्भान्
आक्रोशान् मुखकमलान्नुदन् विचित्रान्।
बिभ्राणो दृशमथ बाष्पलेशहीनां
मात्राऽलालयत निजं वपुः स बालः॥
२०.संजातः सुमसदृशस्य हा व्रणोऽयं
प्राणानां हरणचणो मदर्भकस्य।
इत्येवं परमलघुव्रणेन जान्वोः
सूनोरत्यधिकतमामदुःख्यदम्बा॥
२१.वात्सल्यप्रकटनकर्मकाण्डशौण्ड
स्तातोऽपि स्वनयनहीरकस्य दौःस्थ्यम्।
सोढुं स क्रतुपुरतः पतन्नशक्तः
सातङ्कान् सुरपमुखान् सुरान् व्यतानीत्॥
२२.कुर्यातां मम पतनात् परं किमेतौ
बाल्यत्वादिति कुहनावतोऽर्भकस्य।
आमोदं बलकृतशायनेन जातो
धीमन्युः सपदि तिरोहितं चकार॥
२३.शय्यायां सुखरहितं शयान एष
स्वप्नैः स्वं द्रुतमपहार्य वर्णभव्यैः।
कालं कञ्चिदनुभवेन चित्रभूम्ना
देवानां डयनमिवाकरोन्निवासम्॥
२४.जागर्यां पुनरपि शङ्करोऽनुभूय
प्रारेभे तदवधिचित्तबाह्यमाधिम्।
जागर्तिः स्वपनमिति द्वयोर्विशेषः
को यस्माद् द्वयमपि दृश्यसंहितेति॥
२५.जागर्तिः स्वपनमिति ह्युभेऽप्यवस्थे
दृश्यानां निबिडतया परंपरायाः।
सादृश्यं किमु वहतोऽथ साम्यमेव
स्वान्ते चिन्तनमिति तस्य जन्म लेभे॥
२६.द्रागन्याऽप्युदयत तस्य धीसरस्याम्
ऊर्मिर्या स्मरणकरी विहीनदृश्या।
साऽवस्था किमुभययोः स्थिताऽन्तराले
नैवाहोस्विदमुकलक्षणा सतीति॥
२७.जागर्तावहमिति याऽनुभूतिरेषा
स्वप्नेऽपि प्रभवति सैव वाऽपरा वा ?
सौषुप्ती तदुभयभेदवत्यवस्था
बोधेन स्फुरति समेन वाऽपरेण ?॥
२८.इत्येवं धृतकुतुकेन शङ्करेण
स्वान्ताभ्रे विशयघनेषु जन्मवत्सु।

स्वप्नः कोऽप्यतिशयवर्णराशिरम्यो
बालेन स्फुटतरबुद्धिनाऽऽलुलोके॥
२९.उद्याने सुरभिणि मञ्जुपुष्पतत्या
कस्मिंश्चिद् बहुविधचित्रवृक्षभव्ये।
भृङ्गानां विलसति संहतिश्चलन्ती
पक्षाढ्या सुमपटलीव डीनचार्वी॥
३०.सौन्दर्यं रचयति किं न दृक्प्रमोदं
सौरभ्यं न भवति नासिकामुदे किम् ?
धन्यानामनुभवगे किलोभयस्मिन्
स्वान्तेषु क्षरति च किं न दुग्धधारा ?॥
३१.शाखाभिः प्रचुरतराभिरन्तरन्त-
र्वक्राभिः कुसुमदलोपमाभिरारात्।
उत्पादी स्थलकमलत्वकल्पनायाः
कोऽपि द्रुः श्रियमयते प्रकाण्डहीनः॥
३२.पत्राणां किमधिककम्पनैः स्वकीयं
संभाषाविषयककौतुकं तनोति।
द्रष्टॄणां हृदि विटपेन वा निजेन
प्रीतीनां क्षिपति परम्परां पलाशी॥
३३.दंष्ट्राभ्यां झटिति कुटं गजारिरत्ति
क्षुभ्नाति क्रुधमनुभूय चाटकैरः।
नृत्याय स्पृहयति पर्वते वराहो
यज्ञादुद्भवति तिमिङ्गिलो महोग्रः॥
३४.मण्डूका जलजगताः पिपीलिकानां
राज्ञोग्रं कलहकलापमारभन्ते।
कालेऽस्मिन् अरथिरथो जवेन सर्पन्
दृङ्मार्गे पतति पिशाचकैरुपेतः॥
३५.कीटानां ग्रहणकृती किमूर्णनाभे!
जालेन स्वयमधुना बतासि बद्धः।
गीरेषा सुरविहिता श्रवाध्वपाति
न्याश्चर्यं हृदि विदधाति शङ्करस्य॥
३६.स्वप्नानन्तरमयमञ्जसा प्रबुद्धः
शय्यायां निजवपुषः स्थितिं विलोक्य।
स्वप्नानामनुभवकालिकं न तत्त्वं
तेषां मेऽस्फुरदिति चिन्तयाञ्चकार॥
३७.जागर्यादृशमवलम्ब्य हन्त! तस्या
भिन्ना दृक् स्वपनमिति प्रदत्तनाम्नी।
स्वप्नस्य स्वपनदृशैव दर्शने तु
स्वप्नत्वं न खलु विभाति मे कथञ्चित्॥
३८. जागर्येत्यनुभव एव मे तदाऽऽसी
देतर्ह्यप्ययमेव भानमेति।
वैधर्म्यं स्फुरणयुगस्य नास्ति किञ्चित्
साधर्म्यं स्फुटमनुभाति सर्वतोऽपि॥
३९.जागर्तिस्वपनविभेदवान् स्तरस्तु
स्वप्नात् प्राक् तत इति कालयोः समस्ति।
एषोऽहंमतिसहितोऽथवा प्रबुद्धे
तच्छून्यः स्मृतिमयते सुषुप्तिनामा॥
४०.एकैव त्रिविधवती भवत्यवस्था
तिस्रोऽथ प्रकटमटन्ति वाऽप्यवस्थाः।
एतासामियमधुना ततस्तु सैवं
किं कोऽपि क्रम उरुरस्ति वाऽथ नास्ति ?॥
४१.शय्यायां व्रणयुतजानुरस्मि सुप्तः
सातङ्कं बहु दुनुतः प्रसूः पिता च।
एतत् किं स्वपनमुताथ सत्यमेव
स्वान्तेऽस्याभवदिति चोदना नवीना॥
४२.सत्यत्वव्यवहृतिरस्ति दृश्यवृन्दे
किन्त्वेतत् स्वपनवदेव भाति मिथ्या।
आहोस्वित् स्वपनमपीक्ष्यमाणमेवं
रूपं न व्यभिचरतीत्यपृच्छतैषः॥
४३.वाचाटः स घटितचोदनोदयः सन्
मौनेन क्षपयति भूयसा स्म कालम्।
कल्लोलैर्जलधिरिवातिगर्जनोग्रो
लोकस्याभवदथ विस्मयाय शान्तः॥
४४.तीरस्थो जलधिगृहान्न वेत्ति सर्वां
श्चित्तीयानपि न परः परस्य भावम्।
हृत् सूनोर्न जनकयोः स्फुटं बभूव
च्छात्राणामपटुधियां गुरोर्वचोवत्॥
४५.आतङ्कं दधतुरथ प्रसूश्च तातो
बालीयप्रकृतिविभेददर्शनेन।
अल्पाऽपि स्थितिरतिसंकटाय पित्रोः
सूनूनां मुनिजनगाऽधिका किमूत ?॥
४६.अत्यन्तं चटुलमनाः सुतः किमर्थं
जाड्याय स्पृहयति खेलनेष्वसक्तः।
चण्डांशोरिव कथमुत्पले मरीचिः
कस्यैतद्वपुषि पपात दृष्टिरश्रीः ?॥
४७.शाखौकःपतिसदृशो बभूव पूर्वं
योऽयं हा जडभरतेन याति साम्यम्।
संप्राप्तेऽखिलपरिवृत्तियोग्यकाले
सादृश्यं न भजति पारदोऽश्मना किम् ?॥
४८.मौनेच्छुर्विवृतमुखः कदाचिदब्ज
स्मेरास्यः सहजतरं स भाषमाणः।

ग्रीष्मानु प्रथमजलाभिषेकवन्तं
जीमूतं मनसि हठात् ससर्ज पित्रोः॥
४९.भूतः कश्चिदपि बताविरस्त्यमुष्मि
न्नुच्चाट्यो य इति धिया क्रियास्तदर्हाः।
संपूर्णं विधिवदनुष्ठिताः समन्त्रा
विज्ञप्तैर्विबुधपुरोहितः पितृभ्याम्॥
५०.मन्त्रैर्नश्यति यदि विद्यते पिशाची
स्याच्चेत् सा न किमिव साधनैरविद्या ?
प्रेक्षावान् सुरपथपुण्डरीकवल्ली-
छेदाय प्रयतनवान् परशुवधैः कः ?॥
५१.आमोदं समजनयत् कदाचिदुक्त्या
मौनेनापिहितमथास्यबिम्बमस्य।
आह्लादं सृजदिव रोचिषा कदापि
प्रच्छन्नं शशधरमण्डलं घनेन॥
५२.संकोचैः परजनसङ्गकालजातैः
संतोषैरभजत भिक्षुदर्शनोत्थैः।
सादृश्यं भ-पति-निमीलदंशुमालि-
प्रोन्मीलत् सरसिजमस्य किं न चित्तम् ?॥
५३.संन्यासग्रहणकषायवस्त्रयुक्तान्
आलोक्य प्रकटनमाप्तवत्यमुष्य।
प्रीतिर्या न जनिमगच्छदन्यलोके
रुच्येनो यदसति तच्च सान्ध्यरागैः॥
५४.संन्यासिव्रजकृत उत्सवोऽस्य चैत्तः
संन्यासिष्वतिशयसंकटाय जातः।
प्रश्नानामनवरतं कृताभिरुग्रं
बाणानां रिपुषु यथा परम्पराभिः॥
५५. इत्येवं कतिपयवासरेषु यातेष्
आाकाशे बहुषु गतेषु वारिदेषु।
कश्चित् तत्-त्रितयनिमन्त्रणाय बन्धुः
संप्राप्तो निजनगरान्निजे विवाहे॥
५६.सिद्धिः सा समधिगताऽऽत्मना पृथिव्यां
या केनाप्यपरजनेन नैव लभ्या।
इत्थं स स्वयमुपयमं विचिन्त्य हृष्टस्
तद्वार्तामकुरुत मण्डलीकृतास्यः॥
५७.आर्याम्बा शिवगुरुरप्यतीव तुष्टौ
संप्राप्स्यन्निजबहुबन्धुसंगमौ तौ।
''बन्धो! त्वं किमिति करिष्यसे विवाहं ''
क्रुद्धौ शङ्करकृतया तु पृच्छयेत्थम्॥
५८.मङ्गल्यं परिणयपर्व सर्वलोकैः
स्तोतव्यं किमिति कुचोद्यतेऽर्भकेण।
इत्येवं शिवगुरुरुग्रभाववान् सन्
लाल्यं ताडयितुमनाः परैर्निषिद्धः॥
५९.''सूनोस्ते किल वपुरम्बुजाप्तमित्रं
दर्वीस्पृग् दृषदुपमस्तवापि हस्तः।
अश्मा चेत् पतति सुमे शिवं किमेतत् ?''
क्षिप्तः सन्निति स परैर्बभार लज्जाम्॥
६०.नोत्त्रासो मम लपितेऽभवद् यदाऽहं
बन्धुं तत्परिणयकारणे ह्यपृच्छम्।
वाणीं मे किमिति पिता निशम्य ऋज्वीम्
अङ्गारप्रकृतिभरे बभार नेत्रे ?॥
६१.संशीतिर्मनसि गतेत्थमर्भकीया
न प्राप्नोत् परिहरणाध्वपान्थभावम्।
नापि स्वोपयमविचारवार्तयैते
नृत्यं किं विदधाति मुद्-गिरा सहेति॥
६२.एतस्मात् परिघटितात् प्रसंगतोऽनु
प्रायाणाः समुपचयन् ससंभ्रमैर्द्राक्।
सामग्रीरतिचलनैरितस्ततोऽसौ
सौहार्दं शिवगुरुराप मूषिकेण॥
६३.ते स्थूलोन्नतवपुषा सितेन कान्त्या
किङ्किण्या गलगतया कलं क्वणन्त्या।
संसज्ञे वृषभयुगेन युग्यभाजा
वर्णाढ्येऽनसि रुचिरे तदोपविष्टाः॥
६४.हे हे हे इति वचनेन चोदितास्ताव्
उक्षाणौ श्रुतिसुभगेन वाहकस्य।
हंसीयां गतिमनुकारिणाऽऽरभेतां
प्रस्थानं सुपथगतेन मन्दमन्दम्॥
६५.यन्त्रा केवलमथ चालितं न यानं
स्वैर्गानैरपि च सुपूरितं मनोज्ञैः।
सर्वस्य श्रुतियुगलामृतायमानैर्
यानोत्थश्रमनिकरप्रणाशधीरैः॥
६६.'' प्रासंग्यौ! सुरभुवनाध्वनाऽमुना भो!
गम्भीरं गजगति गच्छतां भवन्तौ।
वन्यैणान् सपदि विहङ्गमान् नभोगान्
पाथोगानपि च तिमिङ्गलान् स्मरन्तौ॥
६७.हंसीयं जयति न यौवयं हि रूपं
पद्धत्या न सरितया पराजयोऽस्याः।
तस्माद् वां तरणसदृक्षभावरुच्यान्
को वा नाञ्चति चलनान्मुदं न लोकः ?
६८.मत्सूनू समजमणी शशाङ्कशुभ्रौ
कारुण्यान्मयि कुरुथं क्षमां कृपालू॥

रूक्षं तिष्ठति गुरु दारवं युगं यत्
स्कन्धे वाहितमयि चक्रवर्तिनोर्वाम्॥
६९.मुग्धौ हे करिकलभौ करीन्द्रवाहौ
कैलासे कृतसदनौ हृदि प्रियौ मे।
मातुर्वां नभसिचलौ ध्वजौ कुलस्य
द्राग् यातं पवनगतिं मुदा दधानौ॥
७०.विश्लिष्टाम्बुदपतनानु निःसरद्भिः
पाप्मानं मृदुलतरं नुदद्भिराराराात्।
चण्डाशोरवनिगतैः करैरनुग्रैः
पूर्वाह्ने दिनमभवन्मनोमनोज्ञम्॥
७१.तन्वम्भोधरगजपोतमभ्रवृन्द-
क्रीडाऽवन्युपगतसूर्यकन्दुकेन।
क्रीडन्तं सकुतुकमीक्षमाण ऊर्ध्वं
बाले द्राक् स्मरणमगाद् गणेन खेला॥
७२.''सिंहानामिव करिणामिव प्रजानाम्
आहोस्विद् गणमिव चित्रचित्ररूपम्।
अम्भोदं सृजति निसर्गचित्रकारो
नीलाढ्यो गगनपटेऽवदातकालम्॥
७३.इत्येवं दहनजधूमधूम्रतात
व्याहारात् कुतुकभरो विचिन्त्य बालः।
आहार्यां स्वहृदि ददर्श काव्यसृष्टिं
ब्रह्मास्यद्युतिनिचयापहारधीराम्॥
७४.काण्डाभ्यामवनितलाद् द्विधा विभक्य
व्यूताभ्यामिव समुपात्तनृत्यभङ्गिम्।
दृङ्मार्गाध्वगमवलोक्य कञ्चन द्रुं
स्वस्यासावकुरुत भाविनर्तकत्वम्॥
७५.शाखाचङ्क्रमणपटून् कुटुम्बयुक्तान्
लाङ्गूलभ्रमणकुतूहलप्रदातॄन्।
चीत्कारेष्वपि कलहेषु संप्रवृत्तान्
आलोक्याऽकृत करतालिकां स कीशान्॥
७६.आकाशप्रणिहितदृष्टिरूकलेखा
मभ्राधो बहुविधडीनभङ्गिभव्याम्।
वीक्ष्यासौ मनसि बभार पाठशाला-
कोष्ठान्तःपठदुपविष्टशिष्यपङ्क्तिम्॥
७७.मध्येऽध्वं नयनगता यदा तदा वा
पान्थाः केऽप्यतिमुदिताः पथीनशान्त्या।
सस्यैस्ते कुतुकभरैरभीक्षिताः किं
क्षेत्रीयैरपरिचितावलोकनोत्कैः॥
७८.औहिष्ट प्रचुरतरात्मलीनदृष्टे-
राप्तव्यं पुरमचिरात् किलाप्यमानम्।
अग्राग्रप्रणिहितपुण्डरीकमैत्री-
प्रीताक्षिद्वयरुचिरास्यवान् कुमारः॥
७९.सम्मर्दैर्विपणिगताध्वचारिलोक-
प्रोद्भूतैः श्रुतिपुटकर्कशैश्च शब्दैः।
वृद्धानां वचनचये स्थितस्य चित्रं
श्वभ्रस्यारचयदथैष चित्तभित्तौ॥
८०.कार्याद्वा बहुकरणप्रदर्शनेच्छा-
वत्त्वाद् वा नृभिरतिसंभ्रमैः सरद्भिः।
संपूर्णं परिणयगेहमैक्षताग्रे
बालीयप्रकृतिकुतूहलेन हीनः॥
८१.अद्राक्षीन्निरयपराजयप्रसंग-
प्राज्ञेऽपि त्रिदिवकणं वरस्य गेहे।
फुल्लास्यः शिवगुरुसूनुरिष्ट
नानाक्रीडेच्छावदपरबालदर्शनेन॥
८२.उक्तस्वागतनिजबन्धुवर्गमीक्षा
ञ्चक्राते प्रमदभरौ पिता प्रसूश्च।
सूनुस्तु द्रुतमथ कोऽस्मि के ममैते
म्लानास्यः क्षणमिति चिन्तयाञ्चकार॥
८३.निम्नस्त्रीनरकलहं झषापणीयं
शाखौकोगणगतचित्रचेष्टितं च।
धीवक्रो हृदि युगपत् ससर्ज बालः
सम्मर्दिन्युपयमपर्वमर्त्यमेले ॥
८४.प्रेतानामपि बहुलां त्रपां विधाय
प्रोद्भूतिं किमकुरुतां जुगुप्सितस्य।
वस्त्रैः स्वैः परिणयकालिकैर्नवोढौ
प्राज्ञानामपहसनप्रकारवीरैः॥
८५.कैश्चित् संविकसनमाप्तवान् प्रसंगै
र्ब्रध्नीयैरिव किरणैः प्रभातपद्मः।
हास्यादिप्रियजनसृष्टवाक्यखण्डैर्
गम्भीरव्यवहृतिशृङ्गभङ्गशौण्डैः॥
८६.आहूतः स विविधखेलनाय बालैर्
उत्साहादिव गतवान् विनोदभूम्ना।
मुग्धार्हक्रमलसदुक्तिगूह्यमान-
स्वान्ताम्भोध्युदितसमस्तचिन्तनोर्मिः॥
८७.अह्नाय स्थितिविषये पितुर्जनन्या
बालानां परिणयकारिणाऽथ नृणाम्।
सन्देग्धुं समुपचक्रमे तदानीं
स्वास्तित्वे विशय-पराणुनापि रिक्तः॥
८८.तत्रास्तां द्वि-दिगतध्वनोर्द्वयोर्द्वाव्
अध्वन्यौ विषमगतेन शङ्काराख्यौ।

क्रीडालुः कपिचपलो वयोऽर्हधीमान्
एकोऽन्यः स्वनयनदृश्यसंशयालुः॥
८९.जय्योऽयं कथमपि नेति पूर्वमाप्तां
कीर्तिं सोऽत्यजदपजीय दुष्ठु खेलन्।
चिन्तानां सरणिरजायतास्य चित्ताज्
ज्वालोग्राच्छिखरिमुखादिवाश्मधारा॥
९०.वीक्षन्ते जनिमृतिमध्यकालिकानां
हास्यानामपि लहरीश्च रोदनानाम्
जायन्ते जगति जनास्ततो म्रियन्ते
विश्वस्य स्थितिरतिनीरसावसाना॥
९१.अग्रे ये कलकलसंयुताट्टहासाः
प्रामोदाः परिणयकालिका विलासाः।
मर्त्यानां लघुतरचित्तलब्धवासाः
सर्वे ते त्रिचतुरवासरप्रयासाः॥
९२.गेहास्ते पवनसखीयधूमधूम्राः
शास्त्राणामपि पठनञ्च पाठनञ्च।
ताश्चेष्टाश्चटुलमनस्कखेलनानाम्
एतन्मे सकलमसङ्गतं विभाति॥
९३.कालः स द्रुततरमेति यत्र गाढं
मच्छीर्षं रुजमयते समिद्धरेण।
यज्ञोत्थैरतिमलिनैश्च हन्त ! धूमैश्-
चक्षुर्भ्यां प्रवहति लोतकप्रवाहः॥
९४.इत्थं चिन्तातुरः सन्नपि सहजतरं वर्तमानो बहिः स
क्रीडां बालैरकार्षीदहसदकथयच्चेष्टितान्यप्यतानीत्।
तूलव्यूहोपमेयो जनयति न भयं वारिदः सर्वदाऽपि
क्षोणीकम्पार्थमन्तःपरिघटिततटित्स्फूर्जथुर्गर्जनेन॥

**इति ब्रह्मकाव्ये तृतीयः सर्गः**

## कन्नडनिघण्टौ दृष्टे किमर्थं ममातितमाम् अजायत सन्तोषः ?

कोऽपि संस्कृतज्ञः अतीवक्लेशेन मातृकास्थं कस्यापि ग्रन्थस्य पाठं संशोध्य पदच्छेदपादच्छेदादिकं निर्णीय ग्रन्थं प्रकाशयति। भूयान् समयोऽतीयते। संपादको निधनमुप गच्छति। संपादितस्य ग्रन्थस्य पुनः प्रकाशनं भवति। तत्र संपादकस्य नाम अपवार्यते। पीठिकाऽन्या योज्यते।

ग्रन्थसंपादने मुद्रणार्थं ग्रन्थस्य सज्जीकरणम्, पाठान्तराणामेकत्र संकलनं, तथा परिशिष्टादियोजन मित्यादिकं संपादकजनभिन्नेन जनेन(भिन्नैर्जनैः)क्रियते, तेषां नाम-केषुचन ग्रन्थेषु- कुत्रापि न योज्यते।

इत्थंभूता परिस्थितिः सर्वत्राप्यस्तीति नाहं वदामि। परन्तु केषुचन प्रसंगेष्वेवं भवतीति केवलं निवेदयामि येषु - ये जना वञ्चितनामानस्ते प्रायेण परम्परीणया पद्धत्याऽधीतसंस्कृता भवन्ति, अथ च इङ्गलीष्-भाषाज्ञानहीना भवन्ति। संस्कृतपीठिकानाम् अपवारणं पुनर्मुद्रितेषु ग्रन्थेष्वतीव साधारणम्। तर्कसंग्रहस्य चन्द्रशेखरशास्त्रिसंपादितस्य चौखम्बाप्रकाशनसंस्थया पुन र्मुद्रितस्य संस्कृतपीठिकापवारणमत्र प्रत्यक्षं निदर्शनम्। आर्कैव् इत्यत्र उपलभ्यमानोऽयं नास्त्यङ्गविकलो दैवादिति समाधातव्यम्।

अकस्मात् कन्नडनिघण्टुरष्टसंपुटात्मको विशाल कायो मया दृष्टः। निघण्टोरस्य स्वरूपं कदाऽप्यन्यदा परिचाययामि।

दृष्टनिघण्टोर्मम हृदयमानन्दतुन्दिलमजायत। नृत्यानीति स्वान्तमकथयत्। परन्तु नाहमनृत्यं, दृष्टमन्नृत्याः कुटुम्बवर्ग्या हसेयुरिति भीतः! अस्तु, को वा मम सन्तोषातिरेकस्य हेतुरिति ब्रवीमि।

अत्र पीठिकाभागे न केवलं संपादकसहसंपादक साहाय्यकारिणां जनानां नामानि, अपि तु सेवकानामपि नामानि प्रकटितानि। तद्विवरणमित्थमस्ति-

समालोचनसमितिसदस्याः-६, ग्रन्थेभ्यः प्रयोगान् संकलय्य प्रदातॄणां संख्या-६४ (अत्र चतस्रो विदुष्यश्च सन्ति), स्वप्रदेशीयवाग्रूढीनां विशिष्टपदानां च प्रेषयितारः ९,संपादकाः-३,सहसंपादकाः-९,प्रतिकाराः-३,प्राग्रूप शोधकः-१, उट्टङ्कनकाराः-४, अल्पकालिकसाहाय्यकारिणः-४, पत्रकाणां विश्लेषणकारिणः-३, आवश्यककार्यकारिणः-३,सेवकाः-२ आहत्य १११(द्वितीयं मुद्रणं २०१०)

दर्श्यतां कोऽपि संस्कृतग्रन्थो मह्यं यत्र सेवकानां नाम मुद्रापितम्। संस्कृतभाषयैव संशोधनप्रबन्धाः किल प्रकाश्यन्ते सागरिकादिपत्रिकासु। ''वर्ल्ड् स्याँन्स्क्रीट् कान्फेरेन्स्'' इत्यस्मिन् महानाटके कदाऽपि संस्कृतभाषया रचितानां संशोधनलेखानामुद्धृतिः कृता श्रुता वा दृष्टा वा ? अत्र भारतीया एवापराद्धा ये ''विदेशीयैः पण्डितैः स्वसंशोधनग्रन्थेषु भारतीया आधुनिका ग्रन्था नोद्ध्रियन्त'' इति द्राङ्क्षन्ति। हंहो, भारतीयैर्युष्माभिः संस्कृतलेखाः कति नामत उद्ध्रियन्ते-तदादौ प्रकाश्यताम्। ''न्याषनल् एण्ड् इण्टर्न्याषनल् नेम् एण्ड् फेम् नास्ति लेखानाममीषाम् '' इति यदि वादो यौष्माकीणः, विदेशीयान् अधिक्षेप्तुं नास्त्यधिकारो युष्माकम्। प्रथमतः संस्कृतलेखा अपि नामत उद्धरत यूयं युष्मल्लेखेषु। अन्यत् सर्वं तदनन्तरम्।